मदाश्रमस्थो वानप्रस्थाश्रमाश्रयणाय समुत्सुकः सर्वथा भवद्भिर्न निवारणीयः। अत्र स्थितस्त्वयं भगवद्भक्तिम् उपलप्स्यते। भवन्तश्च पितृसन्निधौ न सुखम् अवाप्स्यन्ति" (४०) इति। महर्षेः आज्ञाम् अधिगम्य ते पितुर्वानप्रस्थाश्रमाधिगमप्रतिषेधाग्रहम् अत्यजन्। राजवाहनं पुष्पपुरेऽवस्थाप्य तदनुज्ञया सर्वेऽपि परिजनाः स्वानि स्वानि राज्यानि प्रतिपाल्य स्वेच्छया पित्रोः समीपे गतागतम् अकुर्वन्। एवम् अवस्थितास्ते राजवाहनप्रमुखाः सर्वेऽपि कुमाराः राजहंसाज्ञया सर्वमपि वसुधावलयं (४१) न्यायेन परिपालयन्तः परस्परम् ऐकमत्येन वर्त्तमानाः पुरन्दरप्रभृतिभिः (४२) अपि अतिदुर्लभानि राज्यसुखानि अन्वभूवन्।

इति श्रीदण्डिना कृतौ दशकुमारचरिते ....
चरितं नाम अष्टम उच्छ्वासः।

इति श्रीदण्डिना कृता दशकुमारचरितस्य
उत्तरपीठिका समाप्ता।

---

(४०) अवाप्स्यन्ति प्राप्स्यन्ति, अधीनत्वादिति भावः।

(४१) वसुधावलयं पृथिवीमण्डलम्।

(४२) ऐकमत्येन एकमतावलम्बनेन। पुरन्दरप्रभृतिभिः इन्द्रादिभिः।

इति अष्टमोच्छ्वासटीका।

इति बि, ए, उपाधिधारिणा पण्डितकुलपतिना श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता बालबोधिनी व्याख्या।